**दोःकोटिज्ये नयेच्छीघ्रोच्चोनान्मन्दस्फुटात्ततः ।। २८ ।।**

इति । मध्यमं पृथग्विन्यस्य स्वमन्दोच्चं विशोध्य शिष्टा मन्दकेन्द्र-संज्ञितादुक्तवन्मान्दफलमानीय तस्मिन्नेव पृथक्कृते मध्यमे मन्दकेन्द्रस्य मेषतुलादिवशादृणं धनं च कुर्यात् । एवं कृतो मध्यमो मन्दस्फुट इत्युच्यते । तस्मात्पुनः पृथक्स्थिताच्छीघ्रोच्चं विशोध्य शिष्टाच्छीघ्रकेन्द्रसंज्ञिताद् उक्तवद्दोः-कोटिज्ये नयेदिति ।।

अथ कुजादीनां शीघ्रव्यासानुपदिशति—

**रव्यर्का द्व्यब्धिसमिधो विधुरामाभ्रसिन्धवः ।**

**खबाणाभ्रेन्दवो द्वीषुशरशैलाः कलांशकाः ।**

**शीघ्रव्यासाः कुजादीनां छेदास्ते संस्कृतित्रयात् ।। २९½ ।।**

इति । एते रव्यर्कादयः क्रमेण कुजादीनां कलाभागरूपाश्शीघ्रव्यासाः । तेऽक्षरसंख्यया तु—

व्यासाः कुजात्स्फुटप्रायप्रभाकरकलानिभाः ।

औशनस्यप्रमाणस्थाः कलाभागात्मकाः क्रमात् ।।

इति । एत एव त्रिभिस्संस्कारैस्संस्कृताः छेदा भवन्ति ।

अथ तत्र मन्दकोट्याः संस्कारप्रकारं दर्शयति—

**वस्वक्षविश्वैकसुरैराहता मन्दकोटिका ।**

**भागात्मिकापि व्यासेषु लिप्ता स्थाने विधीयते ।। ३०½ ।।**

इति । कुजादीनां पूर्वानीतान्मन्दकोटिज्याभागान् क्रमेण वसुभिरक्षैर्विश्वैरेकेन सुरैश्च निहत्य शीघ्रव्यासस्य लिप्तास्थाने केन्द्रपदक्रमेण धनमृणं च कुर्यात् ।

तत्र शीघ्रदोर्ज्याल्यंशस्तत्कोटिरपि कर्तव्य इत्याह—

**शीघ्रदोस्त्र्यंशकैर्भूचन्द्राश्वीन्द्वब्धिहृतैर्युताः ।। ३१ ।।**

**ते शीघ्रकेन्द्रवशतस्तत्कोटचंशैश्च संस्कृताः ।**
**शीघ्रच्छेदाः कुजादीनां किन्तु ते मृगकर्कितः ॥ ३२ ॥**

**द्विघ्नांशकाढ्या लिप्तासु शीघ्रकोटिः कुजज्ञयोः ।**
**कर्क्यादौ व्येककोटिघ्नबाहुना तु कुजाच्छयोः ॥ ३३ ॥**

इति । शीघ्रदोर्ज्याभागत्र्यंशान् कुजादीनां क्रमेण भूचन्द्राश्वीन्द्वब्धिभिर्निहत्य मन्दकोटिसंस्कृते शीघ्रव्यासे प्रक्षिप्य तत्र शीघ्रकेन्द्रवशतः तत्कोटिज्यांशानपि संस्कुर्यात् । ते शीघ्रच्छेदा भवन्ति । तेऽत्र कुजबुधयोः पुनर्मृगकर्कितः सर्वदैव शीघ्रकोटचा भागात्मिकया द्विगुणया तस्या एव कोटचाः लिप्तास्थानेषु युञ्ज्यात् । अथ कर्क्यादौ कुजाच्छयोः कोटिज्याभागादेकं भागं विशोध्य तेन भुजां संगुणय्य शीघ्रकोटितः त्यजेत् । तत्र कुजस्य कोटचां तत्संस्कारद्वयमपि कर्तव्यम् । बुधस्य तु अनयोः प्रागुक्तमेव । शुक्रस्य पुनः चरम एव संस्कारः कोटचां कर्तव्यः । एवं कृतया कोटचा संस्कृताः कुजबुधभृगूणां शीघ्रच्छेदाः स्फुटा भवन्ति ॥

अथ शीघ्रफलानयनं तेन स्फुटीकरणं चाह—

**दोःकलाभ्यः स्वशीघ्रच्छेदाप्तं शीघ्रफलं स्फुटम् ।**
**कृतमान्दफले कार्यं ततो भौमादयः स्फुटाः ॥ ३४ ॥**

इति । दोर्ज्याभागान् कलीकृत्य ततः स्वशीघ्रच्छेदेनोद्धृतं भागादिकं शीघ्रफलं स्फुटं भवति । तत एवमानीतं शीघ्रफलं पृथक्स्थिते कृतमान्दफले मध्यमे शीघ्रकेन्द्रस्य मेषतुलादिवशादृणं धनं च कुर्यात् । एवं कृता भौमादयः स्फुटा भवन्ति ॥

अथ शीघ्रगत्यानयनायाह—

**शीघ्रव्यासो दोःफलतः शक्रवर्यंशविवर्जितः ।**
**स मन्दस्फुटशीघ्रोच्चगतिभेदसमाहृतः ।। ३५ ।।**
**शीघ्रच्छेदहृतो लब्धं शोध्यं शीघ्रगतेर्गतिः ।**
**शोध्याल्पयक्ते तूच्चभोगे वक्रभुक्तिस्तु शिष्यते ।। ३६ ।।**

इति । शीघ्रव्यासमुक्तवदानीतं स्वशीघ्रफलस्य शक्रवर्यंशेन विरहितं कृत्वा मन्दस्फुटस्य शीघ्रोच्चस्य च गत्योरन्तरेण निहत्य स्वशीघ्रच्छेदेन विभज्य लब्धं फलं शीघ्रोच्चभुक्तेर्विशोधयेत् । तत्र शिष्टं शीघ्रगतिर्भवति । तत्र शोध्यफलस्य शीघ्रोच्चगतित आधिक्ये सति शोध्यफलाच्छीघ्रोच्चस्य गतिं विशोधयेत् । तत्र शिष्टा वक्रगतिर्भवतीति ।।

अथायनचलनानयनायाह—

**कलानवकसंयुक्ते भागषोडशके क्षिपेत् ।**
**दशांशोनाब्दतुल्यास्तु लिप्तास्तत्रायनांशकाः ।। ३७ ।।**

तत्र अष्टाभ्रषड्वेदप्रमिते खण्डाब्देऽयनांशाः कलानवकसंयुक्तभागषोडशकात्मकाः । ततः प्रभृति अतीता येऽब्दाः ते स्वदशांशोनास्सन्तः खण्डाब्दसम्बन्धिन्ययनचलने कलासु प्रक्षिप्ताः तदानीं वर्तमानाब्दे अयनचलनांशका भवन्तीति ।।

अथ श्लोकपञ्चकेन अहर्मानानयनं तत्संस्कारप्रकारं चोपदिशति—

**नखघ्ना विषुवद्भाद्ये द्वितीयेऽक्षांशकोनिताः ।**
**त्र्यंशस्तृतीयभे सायनार्कबाहूद्भवं चरम् ।। ३८ ।।**
**तदन्तरेऽनुपाताप्तं स्वर्णं जूकक्रियादिके ।**
**व्यस्तमस्ते विनाड्यस्ता न मध्याह्नार्धरात्रयोः ।। ३९ ।।**
**स्वपूर्वयुक्ता ग्राह्यास्ता दलिताश्च स्वभुक्तये ।**

**दोःकोटिज्यावधोऽब्ध्यंशोनः पृथग्दोर्गुणाहतात् ॥ ४० ॥**
**खखेन्दुलब्धयुक्प्राणकलान्तरविनाडिकाः ।**
**स्वर्णं युग्मौजपदयोरर्ककेन्द्रोत्थदोःफलात् ॥ ४१ ॥**
**षड्भक्तास्ताविनाड्यस्ता स्वर्णसाम्ये मिथो युताः ।**
**विश्लिष्टा व्यत्यये तिस्रोऽप्येता गत्यंशकाहताः ।**
**स्वर्णं विलिप्तिका वक्रगतौ व्यस्तं स्फुटग्रहे ॥ ४२ ॥**

इति । तात्कालिके स्फुटार्केऽयनचलनं प्रक्षिप्य तस्य भुजाराशिभिश्चरम् आनयेत् । तद्यथा—सायने स्फुटार्के तद्भुजाभागे आद्यराश्यन्तस्थिते सति स्वदेशविषुवच्छायाङ्गुलानि नखैर्विंशत्या गुणितानि चरविनाड्यः स्युः । तस्मिन्द्वितीयराश्यन्तस्थिते तु सैव नखघ्ना विषुवच्छाया अङ्गुलरूपा अक्षांशकेन स्वपञ्चमांशरहिता विज्ञेयाः । तस्मिंस्तृतीयराश्यन्तस्थिते तु नखघ्नविषुवच्छायाङ्गुलत्र्यंशः । तदन्तरे राशिमध्ये पुनरनुपातेन त्रैराशिकेन लब्धमेव विनाडीरूपं चरं विज्ञेयम् । तद्यथा यदि त्रिंशता भागैर्नखघ्नविषुवच्छायाङ्गुलानि पातत: पञ्चमांशोनं वा त्र्यंशं वा प्रथमद्वितीयतृतीयभुजा राशिवशात् विनाडीरूपं चरं भवति । तदेष्टभुजाभागैः कियदिति । एवमानीतं चरं सायनार्कस्य जूकक्रियादिवशाद्धनर्णरूपम् । अस्ते पुनर्व्यस्तं जूकक्रियादिवशादृणधनात्मकमित्यर्थः । मध्याह्ने दिनमध्येऽर्धरात्रे च चरकृतो विशेषो न विद्यत इत्यर्थः । एताश्चरविनाड्यो राशिसंबन्धिन्यः स्वपूर्वराशिचरविनाडीसहिताश्च चरभुक्त्यानयनार्थं ग्राह्याः, दिनमानादौ पुनरर्धीकरणकार्यम् । एवं चरविनाड्यानयनमुक्तम् । प्राणकलान्तरविनाड्यानयनं तु इष्टकाले स्फुटार्कस्य सायनस्य भुजाज्यां कोटिज्यां चानीय तयोः संवर्गात् स्वचतुरंशं विशोध्य पृथक्कृत्य दोर्गुणेन निहत्य खखेन्दुभिर्विभज्य लब्धं पृथक्स्थिते प्रक्षिपेत् । एवं कृताः प्राणकलान्तरविनाड्यो भवन्ति । ताः पुनः तस्यैव सायनार्कस्य युग्मौजपद-

वशाद्धनर्णात्मिका इति । दोःफलविनाड्यानयनं तु अर्कस्य स्फुटीकरणे तत्केन्द्रोत्थं यद् दोःफलं ततष्षड्भिर्भक्ता विनाड्यो भवन्तीति । ताः पुनस्तद्दोःफलवशादेव सर्वदा धनर्णात्मिकाः इति । अथ ताश्चरप्राणकलान्तरदोःफलरूपाः तिस्रो विनाड्यः सर्वा अपि धनेन सर्वासां साम्ये ऋणेन साम्येऽपि मिथो युक्ताः कार्याः । व्यत्ययेन धनर्णभेदे भिन्नरूपविनाडीभिः विश्लिष्टाः कार्याः । एवं कृतास्ता स्फुटगत्यंशकैर्भागीकृतया स्फुटगत्या निहता विलिप्तारूपा ज्ञेयाः । ताः स्फुटग्रहे धनमृणं वा कुर्यात् । तत्र तासां योगे धनात्मके सति प्रक्षिपेत् । ऋणात्मके तु विशोधयेत् । विश्लेषे तु शेषवशादृणं धनं वा कुर्यात् । वक्रगतौ पुनः व्यस्तं यदि ग्रहो वक्रगतिः स्यात् । तदा धनात्मके ऋणं, ऋणात्मके धनं च कुर्यात् । एवं कृते सति स्वदेशस्फुटार्कोदयकालसिद्धस्फुटग्रहो भवतीति ॥

अथ स्फुटार्कचन्द्राभ्यां तिथ्याद्यवगमायाह—

**स्फुटार्करहिताविन्दोः स्फुटाल्लिप्तीकृतात्पुनः ॥ ४३ ॥**
**तिथयः खाश्विशैलाप्ताः तिथ्यर्धानि खषड्गुणैः ।**
**षष्टिघ्नगतगम्याभ्यां गत्यन्तरहृतास्तथा ॥ ४४ ॥**
**गतगन्तव्यनाड्यः स्युर्ग्रहाद्भान्यष्टभिश्शतैः ।**
**योगश्चन्द्रार्कसंयोगात्तदाद्यन्तौ स्वभुक्तितः ॥ ४५ ॥**

इति । स्फुटार्कविरहितात् स्फुटेन्दोः कलीकृतात् खाश्विशैलैर्विभज्य लब्धाश्शुक्लप्रतिपदाद्या अतीततिथयो भवन्ति । तत्र वर्तमानतिथौ गतभागं गन्तव्यभागं च पृथगवगम्य तदुभयं षष्ट्या निहत्य गत्यन्तरभागैर्विभजेत् । तत्र लब्धास्तस्यास्तिथेर्गतगन्तव्यनाड्यः स्फुटार्कोदयावधिका भवन्ति । तथा तस्मादेव स्फुटेन्दोः कलीकृतात् खषड्गुणैर्विभज्य लब्धानि बवादीनि करणानि भवन्ति । तत्रापि गतगन्तव्यांशात् षष्ट्या निहताद् गत्यन्तरेण विभज्य

लब्धा वर्तमानकरणस्य गतगन्तव्यनाड्यो भवन्ति । करणानां संज्ञादयः शास्त्रान्तरतोऽवगन्तव्याः । तदुक्तम्—

बवबालवकौलवतैतिलगजवणिजाख्यविष्टिनामानि ।
सितपक्षस्य परार्धात् परिवर्तन्तेऽष्टकृत्वोऽतः ॥
कृष्णचतुर्दश्यन्ते शकुनिः पर्वणि चतुष्पदः प्रथमे ।
तिथ्यर्धेऽन्त्ये नागः किंस्तुघ्नः प्रतिपदाद्यर्धे ॥ इति ॥

तथा—सिंहो व्याघ्रो वराहश्च खरेभपशुविष्टयः ।
शुक्लप्रतिपदाद्यर्धात् करणानि पुनः पुनः ॥
पक्षी चतुष्पान्नागश्च किंस्तुघ्नश्चान्ततः स्थिराः ॥ इति ॥

अथ रव्यादेर्ग्रहसामान्यात् कलीकृतात् अष्टभिश्शतैर्विभज्य लब्धान्यश्वि-न्यादीनि अतीतनक्षत्राणि स्युः । तत्रापि गतभागं तदूनराशिशिष्टं गन्तव्यभागं च पृथक् षष्ट्या निहत्य स्फुटभुक्त्या विभज्य लब्धा वर्तमाननक्षत्रस्य गतगन्त-व्यनाड्यो भवन्ति । योगो विष्कम्भादिः पुनश्चन्द्रार्कयोस्संयोगादष्टभिश्शतै-र्विभज्य लभ्यते । तत्रापि गतनाड्यानयनं गन्तव्यनाड्यानयनं च नक्षत्रव-दिति । ते च यथा—

चन्द्रार्कस्फुटसंयोगे दृष्टा दस्रादितारकाः ।
विष्कम्भः प्रीतिरायुष्मान् सौभाग्यः शोभनस्तथा ॥
अतिगण्डस्सुकर्मा च धृतिश्शूलं तथैव च ।
गण्डो वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणस्तथा ॥
वज्रस्सिद्धिर्व्यतीपातो वरीयान् परिघः शिवः ।
सिद्धस्साध्यश्शुभश्शुभ्रो ब्राह्मो माहेन्द्रवैधृतौ ॥ इति ॥

द्युगणादि स्फुटान्तं च ग्रहकर्म प्रदर्शयन् ।
परिच्छेदः समाप्तोऽभूत्प्रथमः करणामृते ॥

---

इदानीं दिनमानादिकमानेतुं 'व्यस्तं चरविनाडीभि'रित्याद्यया 'दोषकार' इत्यन्तया श्लोकानां षड्विंशत्या सार्धया समारभ्यते। तत्रैकेन श्लोकेन दिनमानस्य नतनाडीनां चानयनं, ततस्सार्धैस्त्रिभिरिष्टच्छायानयनं, ततश्चतुर्भिरिष्टच्छायातो नाडिकानयनं, ततष्षड्भिस्सार्धैः छायाबाहुकोटिभ्यां दिग्विनिर्णयः, तत एकेन राशिप्रमाणानयनं, ततस्सार्धेनैकेन काललग्नानयनं, ततस्त्रिभिरुदयलग्नानयनं, ततस्सार्धेनैकेन नाडिकाकरणं, ततस्सार्धेनैकेन विक्षेपचरानयनं; ततोऽर्धेन विक्षेपवद्दिनानयनं, तत एकेन व्यतीपातपरिच्छेदः, ततो द्वाभ्यां विक्षेपचलनानयनमिति संक्षेपः ॥

अथ श्लोकार्थो व्याख्यायते—

**व्यस्तं चरविनाडीभिः खाग्नयस्संस्कृता दिनम् ।**
**मध्याह्नान्नतनाड्यः स्युर्दिनार्धद्युगतान्तरम् ॥ १ ॥**

इति। उक्तं प्रागेव चरविनाडीनां धनर्णत्वम्। ताभिर्व्यस्तं कृताः खाग्नयः मेषादौ संयुक्ताः तुलादौ वर्जिताश्च। त्रिंशन्नाडिकादिनं दिनमानं भवतीत्यर्थः। रात्रिमानं पुनस्ततो व्यत्ययादित्यनुक्तमप्यवगन्तव्यम्। अथ स्वदेशदिनमानार्धस्य इष्टद्युगतस्य च यदन्तरं विश्लेषः ता नतनाड्यो भवन्तीति ॥

अथ रवेरिष्टच्छायानयनायाह—

**नतनाड्यूनतिथिनाड्यक्षांशकभदोर्गुणः ।**
**छेदस्स्वसप्तमांशोनचरार्धव्यस्तसंस्कृतः ॥ २ ॥**
**तिथिनाड्यूननतनाड्युत्थश्चेत्तं चरात् त्यजेत् ।**
**भाज्योऽर्कदोर्गुणकृतेः षडशीत्युद्धृतान्विता ॥ ३ ॥**
**अन्त्यज्याक्षश्रुतिहता ततश्छेदोद्धृता श्रुतिः ॥ ३½ ॥**

कृतेन्द्रोनितत्तद्वर्गान्मूलं शङ्कोः प्रभा स्फुटा ॥ ४ ॥
निजरव्यंशसंयुक्ता दलिता सा पदप्रभा ॥ ४½ ॥

इति । तिथिघटीभ्यः पञ्चदशभ्यो घटिकाभ्यः नतनाडीर्विशोध्य शिष्टाभ्यः पञ्चभिर्विभज्य लब्धा ये राश्यादयः ते तिथिनाड्यूननतघटीशरांशराश्यादयः । तेषां दोर्गुणमानीय तत्रार्कस्य दोश्चरदलं निजसप्तमांशोनं व्यस्तं मेषादौ धनं तुलादौ ऋणं च कर्तव्यम् । एवं कृतोऽसौ छेदो नाम । यदा पुनर्मेषादौ नतनाडीभ्यः तिथिनाडिका विशोध्यन्ते तदा तच्छेषादुक्तवदानीतं तत्फलं चरासुभ्यः स्वसप्तमांशोनेभ्यः विशोधयेत् । शिष्टः छेदः । एवं कृतोऽसौ छेदो नाम । भाज्यस्तु तत्र सायनार्कस्य दोर्गुणवर्गा षडशीत्या विभज्य लब्धं फलम् अन्त्यज्यायां वस्वभ्रदन्तिसंख्यायां प्रक्षिप्य विषुवत्कर्णेन निहत्य लभ्यते । ततः छेदेन समनन्तरानीतेन विभज्य लब्धा श्रुतिः छायाकर्णो नाम । तद्वर्गात् कृतेन्द्रसंख्यं शङ्कुवर्गं विशोध्य शिष्टस्य मूलं प्रभा स्फुटा भवति । तत्कालार्कस्य छाया भवति । सा निजरव्यंशेन स्वद्वादशांशेन संयुक्ता दलिता च सती पदप्रभा च भवतीति ॥

अथेष्टच्छायातो नतनाड्यानयनायाह—

पदभा निजविश्वांशहीना द्विघ्ना च शङ्कुभा ॥ ५ ॥
शङ्कुच्छायाकृतियुते छायाकर्णः पदं भवेत् ।
भाज्यात्पूर्ववदानीता छायाकर्णेन संहृते ॥ ६ ॥
चरार्धं स्वनगांशोनं स्वर्णं जूकक्रियादिके ।
पृथक्कृतं तद् बाणाश्विरुद्रघ्नं विभजेत् ततः ॥ ७ ॥
पृथक्कृतेन वेदघ्नान्त्यज्यायुक्तेन यत्फलम् ।
त्यक्त्वा तिथिकृतेः शिष्टमूलतो नतनाडिकाः ॥ ८ ॥

**चराद्विशुद्धोत्थफलमूलं तत्र तिथौ क्षिपेत् ॥ ८½ ॥**

इति । पदप्रभा निजविश्वांशेन स्वत्रयोदशांशेन विहीना द्विगुणा च द्वादशाङ्गुलशङ्कोः छाया भवति । तस्या छायाया द्वादशाङ्गुलशङ्कोश्च वर्गयोगमूलं छायाकर्णः, स हारः । भाज्यस्तु 'भाज्योऽर्कदोर्गुणकृतेष्षडशीत्युद्धृतान्विता, अन्त्यज्याक्षश्रुतिहृते'ति प्रागुक्तविधिना तत्कालार्कतः समानीतः । ततः छायाकर्णेन विभज्य लब्धफले चरार्धं स्वसप्तमांशविहीनं जूकक्रियादिगेऽर्के धनमृणं च कुर्यात् । एवं कृतं तत् पृथग् बाणाश्विरुद्रैर्निहत्य पृथक्कृतेन तेनैव चतुर्भिर्गुणितान्त्यज्यायुक्तेन विभजेत् । तत्र लब्धं तिथिकृतेः तत्त्वाश्विसंख्याया विशोध्य शिष्टमूलं नतनाड्यो भवन्ति । यदा पुनर्मेषादिगतेऽर्के छायाकर्णहृतफलादृणभूतं चरमधिकं स्यात् तदा चरात् तत्फलं विशोध्य शिष्टात् प्राग्वदानीतं फलं तिथौ पञ्चदशनाडीषु क्षिपेत् । ता नतनाड्यो भवन्तीति ॥

अथ छायाकोट्यानयनायाह—

**अक्षकर्णान्नतज्याघ्नाद् भाकोटिश्छेदसंहृता ॥ ९ ॥**

**छायाकोट्यैव विज्ञेयः कालो मध्याह्नसन्निधौ ॥ ९½ ॥**

इति । नतनाडीभ्यः पञ्चभिर्विभज्य लब्धा ये राश्यादयः तेषां दोर्ज्या नतज्या नाम । नतज्याहतादक्षकर्णात् पूर्ववदानीतेन विभज्य लब्धा भाकोटिः छायाकोटिर्नाम । तया छायाकोट्यैव मध्याह्नसन्निधौ कालो विज्ञातुं शक्यः । न तु छाययैव केवलया, दुर्विज्ञेयत्वात् परिसूक्ष्मणां कालावयवानाम् ॥

अथ छायाभुजानयनायाह—

**स्वाद्रयंशोनचरार्धघ्नात् पलकर्णस्य वर्गतः ॥ १० ॥**

**पलभाघ्नच्छिदा लिप्ता लब्धे मेषतुलादितः ।**
**पलभोनयुते छायाभुजा याम्योत्तरा भवेत् ।। ११ ।।**

इति । स्वसप्तमांशोनेन चरार्धेनाक्षकर्णस्य वर्गं निहत्य पूर्वोक्तेन छेदेन लिप्तीकृतेन विषुवच्छायया निहतेन विभजेत् । तत्र लब्धे फले मेषतुलादिवशात् पलभया विषुवच्छायया अङ्गुलया हीने युक्ते च छायाभुजा याम्योत्तरा भवतीति । तत्र मेषादौ पलभया विशुद्धशेषा याम्या, अन्या पुनरुत्तरेति ।

छाया च स्वभुजाकोटयोर्वर्गयोगपदं सदा ।। इति ।।

उक्तरूपायाः छायाकोटयाः तद्भुजायाश्च वर्गयोगपदं सर्वदापि छाया भवतीति ।।

अथ छायाभुजाकोटिभ्यां दिग्वनिर्णयार्थमाह—

**इष्टच्छायाभुजाकोटीस्तिस्रो नीत्वाङ्गुलात्मिकाः ।**
**तच्छायारचिते वृत्ते शङ्कौ केन्द्रस्थिते सति ।। १२ ।।**
**तद्वृत्तपरिधिस्पृष्टं छायाग्रं स्याद्यदा तदा ।**
**छायाग्रावस्थितैकाग्रे द्विघ्नभाकोटिदोर्मिते ।। १३ ।।**
**मिथो व्यत्यस्तदिङ्नेमिस्पृष्टान्याग्रे प्रकल्पयेत् ।**
**उभे शलाके ताभ्यां तु कर्तव्यो दिग्विनिर्णयः ।। १४ ।।**
**कोटया पूर्वापरे ज्ञेये बाहुना दक्षिणोत्तरे ।। १४½ ।।**

इति । तत्र तावदिष्टकाले छाया तद्भुजाकोटीः तिस्रोऽप्यङ्गुलात्मिका नीत्वा तच्छायाङ्गुलव्यासार्धं वृत्तमालिखेत् । तस्य च केन्द्रे द्वादशाङ्गुलशङ्कुमपि स्थापयेत् । एवं कृते सति यदा तच्छायाग्रस्य वृत्तस्पर्शो भवेत् तदा द्विगुणभाकोटयंगुलमिताम् एकामन्यां च द्विगुणच्छायाङ्गुलमितां च शलाकां कृत्वा ते उभे अपि शलाके मिथो दो.कोटिरूपे तस्मिन् वृत्ते तदानीं छायाग्रवृत्त-

परिधिसम्पातस्पृष्टैकाग्रे तद्व्यत्यस्तदिङ्नेमिस्पृष्टान्याग्रे च प्रकल्पयेत् । एवं कृताभ्यां कोटिभुजारूपाभ्यां ताभ्यां शलाकाभ्यां दिग्विनिर्णयः कार्यः । तत्र द्विगुणकोटीशलाकानुसारेण पूर्वापरे दिशौ विज्ञातव्ये । बाहुशलाकानुसारेण च दक्षिणोत्तरे दिशाविति ॥

अथ स्वदेशराश्युदयप्राणविनाड्यानयनायाह—

**राश्यन्तजचरार्धासुकलाविवरसंस्कृताः ॥ १५ ॥**

**दशघ्नगतभांशाः स्वपूर्वोनाभविनाडिकाः ॥ १५½ ॥**

इति । राश्यन्तसमानीतचरार्धविनाडीभिः तत्प्राणकलान्तरविनाडीभिश्च विधिवत्संस्कृता ये मेषादितो गतराशीनां भागाः ते स्वपूर्वराशीविनाडीभिर्विरहिताः तत्तद्राश्युदयविनाड्यो भवन्तीति ॥

अथ काललग्नानयनायाह—

**रविः षड्घ्नाश्चरार्धासुकलाविवरसंस्कृतः ॥ १६ ॥**

**कालार्कः षड्घ्नगतनाड्यंशयुक् काललग्नकम् ।**

**त्याज्या गन्तव्यनाड्यश्चेत् षड्गुणाः कालसूर्यतः ॥ १७ ॥**

इति । इष्टकाले सायनांशस्फुटार्कः षड्घ्नाभ्यां च चरप्राणकलान्तराभ्यां कलासु संस्कृतः कार्यः । एवं कृतः स कालार्क इत्युच्यते । स पुनः षड्गुणिताभिर्गतनाडीभिर्भागात्मिकाभिर्युक्त इष्टकाले काललग्नं भवति । गन्तव्यनाड्यश्चेत् षड्भिः गुणिता गन्तव्यनाड्यो भागेषु कालार्कतः शोध्याः । एवं कृतः स इष्टकाले काललग्नं भवतीति ॥

अथ काललग्नादुदयलग्नानयनायाह—

**काललग्नं निजानीतचरार्धव्यस्तसंस्कृतम् ।**

**तद्दोर्ज्या स्वतुरीयांशहीना कोट्या हृता पृथक् ॥ १८ ॥**

**पलभाघ्नी खवह्न्याप्ता द्विधैका स्वं पृथक्स्थितौ ।**

**अन्या कोट्यष्टमांशघ्नी स्वर्णं कोटीवशादपि ॥ १९ ॥**

**कलाप्राणान्तरं तत्तु चरार्धव्यस्तसंकृते ।**

**व्यस्तं कार्यं काललग्ने प्राग्लग्नं भवति स्फुटम् ॥ २० ॥**

इति । उक्तवदानीतं काललग्नं स्वतस्समानीतेन चरार्धेन व्यत्ययात् संस्कृतं कार्यम् । ततः चरार्धसंस्कृताद्दोर्ज्यां कोटिज्यां च समानीय दोर्ज्यातः स्वचतुर्थांशं विशोध्य कोटिज्यया निहत्य पृथग्विन्यस्य पलभया निहत्य त्रिंशता विभज्य लब्धं द्विधा कृत्वा तत्रैकं पृथक्कृते प्रक्षिपेत् । अन्यत्पुनः कोटिज्यात अष्टमांशेन निहत्य कोट्याः पदवशात्तत्रैव धनमृणं च वा कर्तव्यम् । एवं कृतं कलाप्राणान्तरं नाम । तच्चरार्धव्यस्तसंस्कृते काललग्ने व्यस्तं कार्यम् । तत् स्फुटं प्राग्लग्नं भवतीति ॥

अथ प्राग्लग्नतो गतगन्तव्यप्राणानयनायाह—

**लग्नं निजचरार्धासुकलाविवरसंस्कृतम् ।**

**काललग्नं ततः कालार्कोनात् षड्भिर्हृतांशकाः ॥ २१ ॥**

**नाड्यो गताः स्युस्त्यक्तेऽर्कादस्तकाले तथेतराः ॥ २१½ ॥**

इति । प्राग्लग्नं स्वतस्समानीतेन चरार्धेनासुकलाविवरेण च विधिवत्संस्कृतं काललग्नं भवति । तस्मात्कालार्काद् इष्टकालजं कालार्कं विशोध्य शिष्टं भागीकृत्य षड्भिरुद्धृता गतनाड्यो भवन्ति । अस्तकालकाललग्ने कालार्कात् त्यक्ते सत्येवं कृता गन्तव्यनाड्यो भवन्तीति ॥

अथेन्दुदिनमानानयनायाह—

**क्षेपः सौम्येतरः पातोनेन्दुदोर्ज्यामराहता ॥ २२ ॥**

**क्षेपोऽक्षभाघ्नो द्युचरकोटिज्यात्र्यंशसंयुतैः ।**

**षड्वह्निभिर्हृतस्तस्मात् क्षेपाधीनं चरं स्फुटम् ॥ २३ ॥**

**कृतक्षेपचरं क्षेपशालिनां तु स्फुटं दिनम् ॥ २३½ ॥**

इति । पातोनात् स्फुटेन्दोर्दोर्ज्याभागा अमरैः त्रयस्त्रिंशता निहताः कार्याः । ततस्तस्यैव सायनेन्दोः मेषतुलादिवशात् सौम्यदक्षिणतः क्षेपो भवति । तथा कृतं विक्षेपं विषुवच्छायाङ्गुलैर्निहृत्य तस्माद् ग्रहकोटिज्या-त्र्यंशसंयुक्तया षट्त्रिंशता विभज्य लब्धं क्षेपाधीनं चरं भवति । क्षेपाधीन-मित्यनेन तच्चरस्यापि विक्षेपवशादेव दिग्विभागः सूचितः । विक्षेपशालिनां तु स्वचरेण क्षेपचरेण च संस्कृतमेव स्फुटं दिनं भवति । तेन च क्षेपशालिनां सर्वेषामपि दिनमानानयनं सूचितम् ॥

अथ लाटवैधृतयोः परिज्ञानार्थमाह—

**अन्तरेऽर्केन्दुदिनयोर्विनाड्यः पलभाल्पिकाः ॥ २४ ॥**

**यावत्तावद्व्यतीपातो वैधृतस्तु दिवानिशोः ॥ २४½ ॥**

इति । उक्तप्रकारेणार्केन्द्वोर्दिनप्रमाणद्वयमानीय तयोरन्तरविनाड्यो यावत्कालं विषुवच्छायाङ्गुलेभ्योऽल्पिका भवन्ति तावद्व्यतीपातो लाटाख्यो नाम दोषो भवति । वैधृतस्तु दिवानिशोरिति अर्केन्द्वोर्दिनमानान्तरस्य पल-भातोऽल्पत्ववशाद्यथा लाटाख्यो दोषः तथा तयोरेकस्य दिनमानस्यान्यस्य रात्रिमानस्य चान्तरे विषुवच्छायाङ्गुलेभ्यो न्यूनसंख्ये सति वैधृताख्यो दोषः । तत्राप्येकस्य दिनस्य क्रमाद्वर्धमानत्वे तदन्यस्य क्रमाद्धीयमानत्वे च लाटाख्यो दोषः । वैधृतोऽप्येवं दिनरात्रिप्रमाणयोः। अन्यथा युगपद्वर्धमानत्वे क्षीयमाणत्वे च दोषाभावः इति वेदितव्यम् ॥

अथेन्दोः पदत्रयस्यावगमाय विक्षेपचलनमानेतुमाह—

तिथिलिप्तोनितैस्तानैः कोटिज्यासंस्कृतैरहेः ।। २५ ।।
पातदोर्गुणतो हृत्वा लब्धमंशादि यत्फलम् ।
जूकमेषादिगे पाते स्फुटेन्दुस्तद्युतोनितः ।। २६ ।।
ओजयुग्मतया भिन्नपदोऽर्काद्दोषकारकः ।। २६½ ।।

इति । ताना एकोनपञ्चाशद्भागाः । ते तिथिलिप्ताभिः ऊनिता रहिता राहोः कोटिज्यया संस्कृताश्च कार्याः । तत्प्रकारस्तु मृगादौ धनं कर्यादावृण-मिति । एवं कृतैः तानैः पातदोर्गुणतः कलीकृताद्धृत्वा यल्लब्धमंशादिफलं तत्पाते जूकमेषादिगते धनर्णात्मकम्, अतत्फलेन युक्तोनितस्फुटेन्दुर्यदि तत्काला-र्कादोजयुग्मतया भिन्नपदो भवति । तदा तयोः दिनमानयोः दिनरात्रिप्रमाण-योर्वा अन्तरे पलभाङ्गुलेभ्योऽल्पसंख्ये सति लाटवैधृताख्यौ दोषौ स्याताम-त्यर्थः ।।

दिनमानादिकं वैधृतान्तं कर्म प्रदर्शयन् ।
परिच्छेदः समाप्तोऽभूद् द्वितीयः करणामृते ।।

---

## अथ तृतीयः परिच्छेदः

अथार्केन्द्वोर्ग्रहणद्वयप्रदर्शनाय परिच्छेदान्तरम् 'अर्कस्फुटं सचक्रार्धं' मित्या-दिकया 'कार्या लम्बनवत् स्फुटा' इत्यन्तया श्लोकानां पञ्चविंशत्या समार-भ्यते । तत्र सार्धैस्त्रिभिरर्केन्द्वोः समलिप्तीकरणं, ततो द्वाभ्यां अर्केन्दुतमसां बिम्बानयनं, सतस्सार्धेन चतुष्केण लम्बनानयनं, ततस्त्रिभिः स्फुटनत्यानयनं ततोऽर्धेन परमग्रासानयनं, तत एकेन स्थित्यर्धविमर्दार्धानयनं, ततस्सार्धेन द्वयेन स्पर्शमोक्षयोः स्थित्यर्धलम्बनानयनं, ततोऽर्धेन स्पर्शमोक्षयोर्दिग्विभागः,

तत एकेन बिम्बान्तरानयनं, ततस्सार्धेन द्वयेन वलनोपदेशः, ततस्त्रिभिः परिलेखनप्रकारः, तत एकेन बिम्बान्तरानयनं पर्वान्तस्फुटीकरणं च क्रियत इति तात्पर्यार्थः ॥

अथ क्रमेण श्लोकार्थो व्याख्यायते—

**अर्कस्फुटं सचक्रार्धं भूच्छाया स्फुटमुच्यते ।**
**सूर्यास्तमयकालोत्थौ छायाचन्द्रौ समीपगौ ॥ १ ॥**
**उदये वाथ विन्यस्य तद्योगोऽत्र निरूप्यताम् ।**
**ग्रहयोरन्तरे स्वल्पेऽनल्पभुक्तेः पुरस्सरः ॥ २ ॥**
**यदाल्पगतिरेष्यः स्यात्तदा योगोऽन्यथा गतः ।**
**युत्या भिन्नदिशोर्गत्योरन्तरेणैकदिक्कयोः ॥ ३ ॥**
**ग्रहान्तराद्दिनानि स्युस्तैस्समावनुपाततः ॥ ३½ ॥**

इति । सूर्यास्तमयकालार्कः प्रक्षिप्तराशिषट्को भूच्छायास्फुटमुच्यते । चन्द्रग्रहणे सूर्यग्रहणे च क्रमेण सूर्यास्तमयकाले सूर्योदयकाले च छायाचन्द्रौ सूर्येन्दू च समानीय तद्योगस्य गतगन्तव्यत्वं निरूप्यताम् । तत्कथमिति चेत्, ग्राह्यग्राहकभूतयोर्ग्रहयोर्यदा स्वल्पमन्तरं भवति तदा अल्पगतिरनल्पगतेः पुरस्सरश्चेद् भवति तर्हि तयोर्योग एष्यः स्याद् भावीत्यर्थः । अन्यथा स्वल्पगतेः पुरस्सरो अनल्पगतिश्चेत् तयोर्योगो गतः अतीतः । अथ तयोर्योगो भविष्यन्नतीतो वा कियता कालेन सम्भवतीति चेत् तयोः भिन्नदिशोस्सतोस्तयोरेवान्तरात् कलीकृतात् गतियोगकलाभिर्विभज्य लब्धानि तदन्तरदिनानि भवन्ति । इष्टकालसमागमकालयोरन्तराळदिनानीत्यर्थः । एकदिक्कयोः पुनर्गत्यन्तरकलाभिर्विभजेत् । शिष्टात् षष्टिघ्नात् ताभिरेव तदवयवनाड्यो भवन्ति । अथ तैर्दिनादिभिः तावुभौ समौ समकलौ कुर्यात् । अनुपाततः त्रैराशिकात् ।

कथं, यदि एकस्य दिनस्य दिनस्फुटगतिर्लभ्यते तदान्तराळदिनैस्सावयवैः कियतीति तत्र लब्धं भविष्यति योगे द्वयोः प्रक्षिपेत्, अतिक्रान्ते तु विशोधयेत् । ततो द्वावपि समलिप्तौ स्याताम् । अत्र ग्रहाणां सामान्येन योगकालानयनाभिप्रायेणैवमुक्तम् । सूर्येन्द्वोर्ग्रहणद्वये पुनः अमावास्यायामर्कोदये वा पौर्णमास्यामर्कास्तमये वा समानीतयोः स्फुटार्कचन्द्रयोरन्तरकलास्फुटगत्यन्तरेण विभज्य लब्धाः सावयवाः पर्वनाड्यो भवन्ति । ताभिस्तावुभौ समलिप्तौ कुर्यादिति । तद्यथा—पर्वान्तनाडीभिरर्केन्द्वोर्दिनस्फुटगतिभागान्निहत्य षष्ट्या विभज्यार्केन्द्वोर्भागस्थाने कुर्यात् । एष्ये योगे धनं कुर्यात् । गते तु ऋणमिति । अत एवोक्तं—

सूर्यास्तमयकालोत्थौ छायाचन्द्रौ समीपगौ ।
उदये वाथ विन्यस्य तद्योगोऽत्र निरूप्यताम् ॥
चन्द्रेऽधिके गतो योगो न्यूने चैष्य इति स्थितिः ।
तदन्तरं तु षष्टिघ्नं गत्यन्तरहृतं तयोः ॥
योगकालो घटीपूर्वो गतो गम्योऽपि वा क्रमात् ॥ इति ॥

अथार्केन्द्वोर्बिम्बव्यासलिप्तानयनायाह—

**त्रयस्त्रिंशद्रवेरिन्दोर्बिम्बं सार्धाः कुवह्नयः ॥ ४ ॥**
**स्वकेन्द्रकोटीशैलाग्निभागैर्व्यस्तं कृताः कलाः ॥ ४½ ॥**

इति । रवेर्बिम्बव्यासकलाः त्रयस्त्रिंशत् । इन्दोस्त्रिंशद्द्विकलासहिता एकत्रिंशत्कलाः । तत्र रवेर्बिम्बव्यासकलाः स्वकेन्द्रकोटिज्यातः सप्तमांशेन तत्केन्द्रस्य मृगकर्क्यादिवशादूनयुक्ताः स्फुटाः स्युः । चन्द्रस्य स्वकोटिज्यात्र्यंशेन तद्वत् संस्कृताः । एवं कृतास्तु ताः स्फुटाः स्युरिति ॥

अथ तमोबिम्बानयनायाह—

**षड्विलिप्तोनवह्नीशा रविबिम्बकलोनिताः ॥ ५ ॥**

**छायेन्दुकोट्याः स्वाष्टांशयुतया व्यस्तसंस्कृताः ॥ ५½ ॥**

इति । वह्नीशतुल्याः कलाः षड्विलिप्तोना रविबिम्बकलाभिरूनिताश्च सत्यश्छायातमोबिम्बं भवति । सा चेन्दुकोटिज्यया स्वाष्टांशयुतया व्यस्तं संस्कृता स्फुटा भवतीति ॥

अथ लम्बननाड्यानयनायाह—

**इन्दुत्रिभोनलग्नान्तरांशकाष्षड्भिरुद्धृतम् ॥ ६ ॥**
**नतं तदूनिताद्दस्रयमळान्नतसद्गुणात् ।**
**नवाश्विभिर्नताष्टांशयुतैर्लब्धं पृथक् ततः ॥ ७ ॥**
**नतिवर्गाद्यमाद्र्यंशैर्हृतात् षष्ट्युद्धृतोनितम् ।**
**लम्बनं तत्पृथग्द्रनतनाड्यन्तराहतात् ॥ ८ ॥**
**पञ्चनाड्यधिकोनोद्यद्राशिमानाहृतात् ततः ।**
**द्वासप्तत्या विनाड्यस्ता लम्बनाडीऽवृणं धनम् ॥ ९ ॥**
**अधिकोने राशिमाने नाडीपञ्चकतः क्रमात् ।**
**लम्बनं सुस्फुटं ज्ञेयं दृक्क्षेपेन्द्वधिकत्वतः । १० ॥**
**पर्वान्ते स्वमृणं कालस्सोऽयं मध्यग्रहो रवेः ।**
**कृतलम्बनकालोत्थे राशिमाननती मते ॥ ११ ॥**

इति । तत्कालस्फुटेन्दोस्त्रिभोनलग्नस्य चान्तराळभागेभ्यष्षड्भिरुद्धृतं नतं नाम । तं नतं दस्रयमळाद्विशोध्य तेनैव नतेन निहत्य नताष्टांशयुतैर्नवाश्विभिर्विभज्य लब्धं पृथग् विन्यस्य नतिवर्गाद्यमाद्रिभिर्विभज्य लब्धेन निहत्य षष्ट्या विभज्य लब्धं पृथग्विन्यस्ताद्विशोधयेत् । तत्र शिष्टं नाड्यादिकं

लम्बनं स्यात् । अथ कृतलम्बनपर्वान्तकाले तत्कालोदयद्राशिप्रमाणविनाडीनां पञ्चनाडीभ्यो न्यूनाधिका या विनाड्यः ताभिर्नतनाड्येकादशनाडीविश्लेषनिहृतापूर्वानीतलम्बनाडीर्निहत्य द्वासप्तत्या विभज्य लब्धम् अनन्तरालम्बननाडीषु धनं ऋणं वा कुर्यात् । उदयद्राशिप्रमाणनाडीनां पञ्चनाडीभ्योऽधिकत्वे ऋणं कुर्यात् । न्यूनत्वे धन कुर्यात् । एवं कृतं लम्बनं स्फुटतरं तिग्मदीधितेरादित्यस्य ग्रहणे ज्ञेयमिति ॥

अथ नत्यानयनायाह—

**काललग्नात् त्रिराश्यूनाद्दोर्ज्यार्धं तेन संस्कृता ।**
**या स्वतुर्यांशरहिता पलभा षष्टिताडिता ॥ १२ ॥**
**पलकर्णविभक्ता स्यान्नतिः खाब्ध्यद्रिभिर्हृता ।**
**गतिभेदकलाभ्यस्ता नतिरत्र स्फुटा भवेत् ॥ १३ ॥**
**दोर्ज्यार्धात् पलभात्यागे सौम्या सा दक्षिणान्यदा ॥ १३½॥**

इति । राशित्रयरहितात्काललग्नतो दोर्ज्यामानीय तस्या यदर्धं तत् स्वतुर्यांशरहितायां पलभायां संस्कार्यम् । तत्प्रकारस्तु त्रिराश्यूनकाललग्ने मेषादौ ऋणं तुलादौ धनमिति तां पुनष्षष्ट्या निहत्य पलकर्णेन विभजेत् । तत्र लब्धा नतिर्भवति । तां गत्यन्तरकलाभिर्निहत्य खाब्ध्यद्रिभिर्विभजेत् । तत्र लब्धा स्फुटनतिर्भवति । सा तु दोर्ज्यार्धतः पलभायास्त्यागे सौम्या भवति । अन्यदा दक्षिणैवेति ॥

**विक्षेपस्तुल्यभिन्नाशानतियुक्तोनितः स्फुटः ।**
**त्यजेत् तं बिम्बयोगार्धात् परमग्राससिद्धये ॥ १४½ ॥**

इति । विक्षेपः प्रागुक्तन्यायेन समानीतः तत्तुल्यभिन्नदिशानत्या क्रमेण युक्तोनितः स्फुटो भवति । तं ग्राह्यग्राहकयोः बिम्बयोगार्धात् त्यजेत् । तत्र शिष्टं परमग्रासप्रमाणं भवति ॥

अथ स्थित्यर्धविमर्दार्धयोरानयनायाह—

**बिम्बयोगान्तरदलक्षेपवर्गान्तरात् पदे ।**
**गत्यन्तरांशकैर्भक्ते दले स्थितिविमर्दयोः ॥ १५½ ॥**

इति । ग्राह्यग्राहकबिम्बयोः यो योगः यच्चान्तरं तद् द्वयमर्धीकृतं सम्पर्कार्धं विश्लेषार्धं च स्याताम् । तयोर्वर्गद्वयं विक्षेपवर्गेण विहीनम् मूलीकृत्य गत्यन्तरांशकैर्विभजेत् । तत्र लब्धे क्रमेण स्थितिविमर्ददले स्यातामिति ॥

अथ स्थित्यर्धस्य स्फुटीकरणायाह—

**स्थित्यर्धे चन्द्रविक्षेपकृतेन्द्रांशयुतोनिते ।**
**स्पष्टे स्पार्शिकमूनं स्याद्युग्विक्षेपेऽन्यथा महत् ॥ १६½ ॥**

इति । स्थित्यर्धमुभयत्र विन्यस्यैकविशः चन्द्रविक्षेपस्य कृतेन्द्रांशं प्रक्षिपेत् । अपरस्माद् विशोधयेत् । एवं कृते स्पष्टे स्थित्यर्धे भवतः । तत्र युग्विक्षपे च सति स्पार्शिकस्थित्यर्धं मौक्षिकादूनं स्याताम् । अन्यथा ओजपद-विक्षपे महदिति ॥

अथ स्पर्शमोक्षकालानयनायाह—

**तदूनयुतमासान्तद्युगते लम्बने कृते ।**
**स्पर्शमोक्षौ रवेः स्यातां न लम्बननती विधोः ॥ १७½ ॥**

इति । तदूनयुतं यन्मासान्तद्युगतं तेन स्थित्यर्धेन स्पर्शकालजेन ऊनं रहितं मोक्षकालजेन युतं च यन्मासान्तद्युगतं, मासान्तद्युगतशब्देन सूर्यग्रहणे

पर्वनाड्योऽभिधीयन्ते । तस्मिन् लम्बने च विधिवत्कृते रवेः स्पर्शमोक्षौ स्याताम् । विधोस्तु ग्रहणे लम्बनमवनतिश्च न कर्तव्ये इति ।।

**स्पर्शे मोक्षे चाविशिष्टे ग्राह्ये स्थित्यर्धलम्बने ।। १८ ।।**

इति । स्पर्शे मोक्षे च स्थित्यर्धं लम्बनञ्चेत्येतदुभयमविशिष्टमेव ग्राह्यमिति ।।

स्पर्शमोक्षयोर्दिगवगमायाह—

**पश्चाद्भागे रवेः स्पर्शः प्राङ्मोक्षस्त्वन्यथा विधोः ।।१८½।।**

इति । रवेर्बिम्बस्य पश्चाद्भागे स्पर्शः, प्राग्भागे मोक्षः । विधोस्त्वन्यथा प्राग्भागे स्पर्शः, पश्चाद्भागे मोक्ष इति व्यवस्थितमेवैतदिति ।।

अथ बिम्बान्तरानयनायाह—

**कृतलम्बनभुक्त्यर्कचन्द्रयोर्विवरस्य च ।**
**कृत्योः स्फुटनतेश्चैक्यान्मूलं बिम्बान्तरं सदा ।। १९½ ।।**

इति । तत्र स्पर्शे मोक्षे तदन्यत्रेष्टकाले वा अर्केन्द्वोः स्फुटद्वयमानीय तयोर्लिप्तासु तत्कालानीतलम्बनाडिकाभिर्निहतान् स्वस्वगत्यंशान् प्रक्षिपेद्वि-शोधयेद्वा । एवं कृतयोस्तयोरर्केन्द्वोरन्तरस्य तत्कालविक्षेपसंस्कृतनतेश्च वर्ग-योगम् मूलीकुर्यात् । एवं कृतमिह स्पर्शादीष्टकाले सर्वत्र बिम्बान्तरं भवति । चन्द्रग्रहणे पुनः तत्कालविक्षेपस्फुटान्तरयोर्वर्गयोगमूलं बिम्बान्तरं भवतीति ।।

अथ वलनद्वयानयनायाह—

**पलभाघ्नी नतज्याक्षं षड्भक्तं वलनं स्फुटम् ।**
**स्वाब्ध्यंशरहिताकोटिजीवा वलनमायनम् ।। २०½ ।।**
**अयनात् सौम्ययाम्यं तदन्यत् पूर्वापराह्णयोः ।**

**दिगेषा बिम्बपूर्वार्धे पश्चार्धे व्यत्ययादतः ।। २१½ ।।**

**तयोर्योगोऽथ भेदो वा वलनं रदमण्डले ।। २२ ।।**

इति । पलभाङ्गुलैर्निहता नतज्याया षड्विभक्ता सा वलनमाक्षं नाम स्फुटं भवति । अथ ग्रहस्य कोटिज्या स्वतोऽब्ध्यंशेन चतुरंशेन रहिता सती आयनं वलनं स्फुटं भवति । तदानयनं वलनम् अयनवशात् सौम्ययाम्यं भवति । अन्यदाक्षं वलनं पूर्वापराह्नयोः सौम्ययाम्यं भवति । उक्तरूपैवैषा दिग्वलनस्य बिम्बपूर्वार्धे वेद्या पश्चार्धे पुनरितो व्यत्ययादिति । अथ तयोर्दिक्साम्ये भेदव-शाद्योगमन्तरं वा द्वात्रिंशद्व्यासमण्डले स्फुटं वलनमिति ।।

एवं ग्रहणविषयमखिलं गणितकर्म प्रदर्शितम् । इदानीं तदेव परिलेखनेन स्पष्टीकर्तुमाह—

**वृत्ते दिक् प्राच्यवाची च वलनाग्रे ततोऽपरा ।**

**वलनद्वितयाग्रस्पृग् या रेखा क्षेपदिश्यतः ।। २३ ।।**

**क्षेपाग्रे च क्रमान्मार्गौ मन्दशीघ्रगयोस्तदा ।**

**वृत्तमध्ये लिखेन्मन्दगतेर्बिम्बं विधोः पुनः ।। २४ ।।**

**मात्वा तत्केन्द्रगैकाग्रबिम्बान्तरशलाकया ।**

**विधोर्मार्गे लिखेद्बिम्बं छन्नांशावगमो यतः ।। २५ ।।**

इति । तत्र प्रथमं षोडशाङ्गुलव्यासार्धेन वृत्तमालिख्य तस्मिन् पूर्वापरां दक्षिणोत्तरां च रेखां कुर्यात् । ततः पूर्वरेखाग्रतः स्फुटं वलनं बिम्बप्रागर्धोक्त-दिशि नीत्वा वलन ग्रे बिन्दुं कुर्यात् । प्रत्यग्रेखाग्रतः पुनर्बिम्बपश्चार्धोक्तवद्वलनं

नीत्वा बिन्दुं कुर्यात् । ततो बिन्दुद्वयावगाहिनीं रेखां विलिख्य तां पूर्वापरां परिकल्प्य तद्वशाद्दक्षिणोत्तरां च विलिखेत् । अनयोः, पूर्वापरा मन्दगतेर्ग्रहस्य रवितमसोरन्यतरस्य मार्गः । तत इष्टविक्षेपान्तरिता तद्दिग्गता तत्काले शीघ्रगतेर्विधोरपि मार्गो भवति । अथ वलनवृत्तमध्यमेव केन्द्रं कृत्वा रवितमसोरन्यतरस्य बिम्बं स्वव्यासार्धेनालिखेत् । ततस्तस्यैव बिम्बस्य केन्द्रतो विधोर्मार्गे बिम्बान्तरशलाकया यथादिगभिमुख्या बिन्दुं नीत्वा विधोर्बिम्बमत्र संलिखेत् । तत्र सूर्यग्रहणे स्पर्शादिमध्यकालं शलाकां प्रत्यङ्मुखीं नयेत् । तत्र आमोक्षं प्राङ्मुखीं चन्द्रग्रहणे पुनरितो व्यत्यासेन नयेत् । एवं स्पर्शमध्येष्टकालेषु मन्दगतेर्बिम्बकेन्द्रात् तत्कालबिम्बान्तरशलाकया प्रमाय विधोर्मार्गे तद्बिम्बमालिखेत् । एवं लिखिते सति यः छादकबिम्बान्तर्गतः छाद्यबिम्बभागः स प्रच्छन्न इत्यवगन्तव्यः । ततो बहिर्भूतभाग एव ष्टुं शक्य इति ॥

अथ पर्वान्त एव कञ्चिद्विशेषं प्रदर्शयितुमाह—

**रवीन्द्वोर्दोःफलांशैक्यं नतज्याघ्नं विनाडिकाः ।**

**स्पर्शे मोक्षे च पर्वान्ते कार्या लम्बनवत् स्फुटाः ॥ २६ ॥**

इति । स्फुटपर्वान्तिकालोद्भवयोरर्केन्द्वोर्दोःफलांशयोरैक्यस्य यदन्तरं तं नतज्यया निहतं विनाडिकाः स्फुटाः स्युः । ताः स्फुटपर्वान्ते लम्बनवत् कर्तव्याः । एवं कृतः पर्वान्तिकालस्फुटो भवति । इति ॥

उपरागद्वयं सम्यक् सूर्येन्द्वोः प्रतिपादयन् ।
परिच्छेदः समाप्तोऽभूत् तृतीयः करणामृते ॥

## अथ चतुर्थः परिच्छेदः

अथ ग्रहाणां दृक्कर्मादिकं प्रदर्शयितुं परिच्छेदान्तरं 'कृतनेत्रभुजङ्ग'त्यादिभि'र्गतिः कार्या विधोः स्फुटे'त्यन्तैः श्लोकैः त्रयस्त्रिंशता समारभ्यते । तत्र सार्धेन श्लोकद्वयेन ग्रहाणां विक्षेपानयनं, तत एकेन बिम्बलिप्तानयनं, ततोऽर्धेन बिम्बान्तरानयनं, तत एकेन नत्युन्नत्योरानयनं, ततस्त्रिभिः दर्शनसंस्कारनयनं ततस्सार्धद्वयेन ग्रहाणामुदयास्तमयपरिज्ञानं, अथैकेन खमध्यस्थे ग्रहे काललग्नानयनं, ततस्सार्धेन त्रयेण चन्द्रस्य द्वितीयस्फुटीकरणं, ततश्चतुर्भिः चन्द्रस्य छायाकर्णाद्यानयनं, तत एकेन सितमानानयनं, ततस्सार्धद्वयेन शृङ्गोन्नत्यानयनं, ततस्सार्धैश्चतुर्भिर्ग्रहान्तरपरीक्षणं, ततष्षड्भिस्तत्रैव क्रियाक्रमप्रदर्शनं क्रियत इति तात्पर्यार्थः ।

अथ श्लोकार्थो व्याख्यायते—

तत्र ग्रहाणां विक्षेपानयनायाह—

**कृतनेत्रभुजङ्गाङ्गदिशो दशगुणाः क्रमात् ।**
**पातभागाः कुजान्मन्दस्फुटात् पातांशवर्जितात् ।। १ ।।**
**ज्ञभृग्वोः कृतमन्दात्स्वशीघ्रोच्चाद्दोर्गुणात्ततः ।**
**अर्कभूशाङ्कनृपतिपार्थिवैर्निहतात्क्रमात् ।। २ ।।**
**स्वव्यासघ्नात् स्वशीघ्रच्छेदोद्धृताः क्षेपलिप्तिकाः ।। २½ ।।**

इति । कुजादीनां क्रमेण पातभागाः कृतनेत्रभुजङ्गाङ्गदिशो दशगुणिता विज्ञेयाः। अथ कुजगुरुशनीनां पातभागाः स्वमन्दस्फुटतो विशोध्याः। ज्ञभृग्वोस्तु कृतमन्दफलात् स्वशीघ्रोच्चतो विशोध्याः । ततो विशुद्धपातान्मन्दस्फुटात् कृतमन्दफलात् स्वशीघ्रोच्चाद्वा दोर्गुणं नीत्वा कुजादीनां क्रमाद् अर्कैर्भूपैरङ्कैर्नृपतिभिः पार्थिवैश्च हत्वा पुनः स्वशीघ्रव्यासेन च निहत्य स्वशीघ्रच्छेदेन विभजेत् । तत्र लब्धा स्फुटा विक्षेपकला भवन्तीति ।।

अथ कुजादीनां बिम्बलिप्तानयनायाह—

**षष्टिः खेशाश्शैलखाक्षीण्यभ्रार्काः खयमाश्विनः ।**

**पङ्क्तिसंयुक्तशीघ्रच्छेदोद्धृता बिम्बलिप्तिकाः ।। ३½ ।।**

इति । कुजस्य षष्टिः पङ्क्तिसंयुक्तस्वशीघ्रच्छेदोद्धृता बिम्बलिप्ता भवन्ति । बुधस्य खेशाः, गुरोः शैलखाक्षीणि, शुक्रस्याभ्रार्काः, शनेः खयमाश्विनः, पङ्क्तिसंयुक्तशीघ्रच्छेदोद्धृता इति सर्वत्रापि ।।

अथ बिम्बान्तरानयनायाह—

**समान्यदिक्क्षेपभिदायुती बिम्बान्तरं युतौ ।। ४ ।।**

इति । तुल्यभिन्नदिशोः स्वस्वविक्षेपयोर्भेदो योगो वा ग्रहयोर्योगे बिम्बान्तरं स्यात् । इति ।।

नत्युन्नत्योरानयनायाह—

**बिम्बान्तरघ्नाद्वलनान्नृपभक्ता नतिर्भवेत् ।**

**ग्रहो नत्या तुल्यदिक्को नतोऽन्यः स्यात् सदोन्नतः ।। ५ ।।**

इति । पूर्वानीताद्वलनाद् बिम्बान्तरेण निहताद् नृपैष्षोडशभिर्भक्ता ग्रहस्य नतिः भवति । यस्य ग्रहस्य यावती नतिः तदन्यद्युचरस्य तावत्येवोन्नतिः। तत्र द्वयोर्ग्रहयोस्समलिप्ताकाले विक्षेपवशाद्यो नतेस्समानदिश्यवतिष्ठते स नतः स्यात् । इतरः पुनः सर्वदोन्नत एव भवेत् । इति ।।

इदानीं ग्रहे दर्शनसंस्कारार्थमाह—

**दृक्कर्मणि नतिर्ग्राह्या पलकर्णोद्धृतैव तु ।**

**नतिकोटिस्तु तद्वर्गात् त्र्यङ्काप्तोनाङ्कुसिन्धवः ।। ६ ।।**

**विक्षेपघ्न्या नतेस्तत्कोट्याप्ता दृक्कर्मलिप्तिकाः ।**

**समान्यदिङ्नतिक्षिप्त्योः स्वर्णमौदयिके ग्रहे ।। ७ ।।**

**व्यस्तमस्ते खमध्यस्थे संस्कार्यमुभयोर्दलम् ।**
**फलस्यौदयिकस्यार्धं तद्वदन्यत्तथास्तवत् ॥ ८ ॥**

इति । पूर्वानीता नतिः पलकर्णोद्धृतैव दृक्कर्मणि नतिर्ग्राह्या, न पुनर्गतिभेदकलाभ्यस्ता खाब्ध्यद्रिभिर्हृता । नतिकोटिः पुनर्नतेर्वर्गात् त्र्यङ्कैर्विभज्य लब्धं फलम् अङ्कसिन्धुभ्यो विशोध्य यच्छिष्यते तत्तुल्या ग्राह्या । अथ नतिं विक्षेपेण निहत्य नतिकोट्या विभजेत् । तत्र लब्धा दृक्कर्मलिप्तिकाः । ताः पुनर्नतिविक्षेपयोः समदिशोरौदयिके ग्रहे क्षेप्याः । भिन्नदिशोस्ततो विशोध्याः। अस्तमये तु व्यस्त समदिशोश्शोध्या भिन्नदिशोः क्षेप्या इति । खमध्यस्थे ग्रहे पुनरुभयोर्दलं संस्कार्यम् । औदयिकस्य दृक्फलस्यार्धमुदयोक्तवद् आस्तमयिकस्यार्धम् अस्तकालोक्तवदिति ॥

अथ तत्संस्कृतस्य ग्रहस्य उदयास्तमयपरिज्ञानार्थमाह—

**दृक्कर्मासुकलाभेदचरार्धैस्संस्कृता ग्रहाः ॥**
**उदयेऽस्ते सषड्भास्ते तच्चरार्धेन संस्कृताः ॥ ९ ॥**
**कालात्मकास्ते तत्कालार्कान्तरे स्युर्यदांशकाः ।**
**अर्काश्शैलेन्दवो विश्वे रुद्रा नव (दशे?शरे)न्दवः ॥ १० ॥**
**अस्तप्राप्तिस्तदा तेषामुदयो वा विधीयते ॥ १०½ ॥**

इति । उक्तप्रकारेण समानीताभिर्दृक्कर्मकलाभिः तात्कालिकासु कलाभेदेन प्राणकलान्तरेण चरार्धेन च विधिवत्संस्कृता ग्रहाः कालात्मका भवन्ति । अथ तत्कालार्कमपि चरप्राणकलान्तरसंस्कारेण कालात्मकं कुर्यात् । ततस्तयोः कालार्ककालात्मकग्रहयोरन्तरे यदार्कशैलेन्द्वादयोंशास्संभवन्ति, तदा तेषां अस्तप्राप्तिरुदयो वाभिधीयते । तत्र चन्द्रस्य अंशा अर्का द्वादश, भौमस्य शैलेन्दवः सप्तदश, बुधस्य विश्वे त्रयोदश, गुरोः रुद्रा एकादश, शुक्रस्य नव, शनेश्शरे-

न्दवः पञ्चदश पूर्वं विप्रकृष्टयोर्ग्रहार्कयोरन्तरे सन्निकर्षक्रमेण तैरस्तप्राप्तिरादेश्या सन्निकृष्टयोस्तूदय इति विभाग इति ॥

अथ खमध्यस्थे ग्रहे काललग्नानयनायाह—

कृतमध्याह्नदृक्कर्मा कृतप्राणकलान्तरः ।
राशित्रययुतस्तस्मिन् काललग्नं खमध्यगे ॥ ११½ ॥

इति । ग्रहे खमध्यस्थे सति तस्मिन्मध्याह्नोक्तं दृक्कर्म कृत्वा प्राणकलान्तरं च संस्कृत्य राशित्रयमपि प्रक्षिपेत् । ततदानीं काललग्नं भवति । इति ॥

अथ चन्द्रस्य द्वितीयस्फुटार्थमाह—

इन्दूच्चोनार्ककोटिघ्नतिथिदोःकोटिमौर्विके ॥ १२ ॥
कोटचाशशरांश एवात्र ग्राह्यः कृत्स्नो भुजागुणः ।
ते द्वे हारेण हर्तव्ये हारः षड्विंशतिः स च ॥ १३ ॥
केन्द्रकोटिज्यया सः स्वाब्ध्यंशया संस्कृतो मतः ।
लब्धांशा ऋणयोर्घाते धनयोर्वा वधे धनम् ॥ १४ ॥
भुजाफलं स्फुटे चन्द्रे गतौ कोटीफलन्त्वृणम् ।
धनर्णयोर्वधे चन्द्रात्त्याज्यं योज्यं गतौ तथा ॥ १५ ॥

इति । तात्कालिकात् स्फुटार्कादिन्दूच्चं विशोध्य कोटिज्यामानीय तया कोटचा तिथेर्दोःकोटिज्ये हन्यात् । तिथिशब्देनात्र स्फुटार्कोनस्फुटेन्दुरभिधीयते । तेनार्कोनचन्द्रदोःकोटिज्ये हन्यादित्युक्तं भवति । तत्र तिथिकोटचाशशरांशः पञ्चमांश एवात्र ग्राह्यः । भुजागुणः पुनः कृत्स्नोऽपि ग्राह्यः । ते द्वे हारेण हर्तव्ये । कोऽयं हार इति चेत् चन्द्रकेन्द्रकोटिज्यया स्वचतुरंशयुक्तया संस्कृतः षड्विंशतिसंख्यः । कोटिज्यायास्संस्कारः प्रागेवोक्तः 'पदशः कोटी-

धनर्णर्णधनात्मिकेति । ततो हारेण लब्धं यदंशादिफलं तत्र भुजाफलं स्फुटे चन्द्रे कार्यम् । कोटीफलं तु गतौ कार्यम् । तत्प्रकारस्तु भुजाफलं स्फुटचन्द्रे ऋणयोर्घाते धनयोर्वधे च धनं, कोटीफलं तु तदा भुक्तावृणं, धनर्णयोर्वधे पुनः तद्भुजाफलं चन्द्रस्फुट त्याज्यं । गतौ पुनः योज्यमिति । एतदुक्तं भवति—यदा अर्कोनेन्दुदोर्ज्यायाः इन्दूच्चोनार्ककोटयाश्च युगपद्धनत्वं तदा धनयोर्वधस्संभवति । उभयर्णत्वे ऋणयोर्वधश्च संभवति । तदा दोःफलं चन्द्रस्फुटे क्षेप्यं, कोटीफलं गतेः त्याज्यं च । यदा पुनस्तयोरेकस्या ऋणत्वमितरस्या धनत्व च तदा धनर्णयोर्वधः सम्भवति । तदा दोःफलं चन्द्रस्फुटात्त्याज्यं । कोटीफलं गतौ क्षप्यं चेति ॥

अथ चन्द्रस्य छायाकर्णाद्यानयनायाह—

**इत्थं स्फुटीकृते चन्द्रे कृतौदयिकदृक्फले ।।**
**चरार्धासुकलाभेदं कृत्वा तं काललग्नतः ।। १६ ।।**
**त्यजेच्छिष्टांशतः षड्भक्ता स्युरुन्नतनाडिकाः ।**
**तदिन्दुदिनमानार्धभेदतो नतनाडिकाः ।। १७ ।।**
**ताभिश्छेदादिकं प्राग्वत्क्षेपादग्न्यङ्कभूमिभिः ।**
**लब्धं धनर्णं गोळैक्यभेदतः क्षेपचन्द्रयोः ।। १८ ।।**
**चन्द्रस्य दोर्गुणे भाज्यस्तद्वर्गान्त्यगुणादिभिः ।**
**ताभ्यां तु छेदभाज्याभ्यां छायाकर्णादिकं विधोः ।। १९ ।।**

इति । इत्थं द्वितीयस्फुटकर्मणोक्तप्रकारेण स्फुटीकृते चन्द्रे उदयोक्तं दृक्फलमसुकलान्तरांश्चरार्धमपि विधिवत्कृत्वा तमिष्टात् काललग्नात् त्यजेत् । तत्र शिष्टा द्युगतनाड्यो भवन्ति । अथ ताभिर्द्युगतनाडीभिः प्राग्वत् "नतनाड्यूनतिथिनाड्यक्षांशकभदोर्गुणः । छेदः स्वसप्तांशोनार्कचरार्ध व्यस्तसंस्कृतः।।

